## ALTERATIONS IN PRICE

| | | To be |
|---|---|---|
| Bury: A History of Greece | | 24s. 0d. net (d) |
| Hall & Stevens: A School Arithmetic. Complete. | With Answers | 15s. 0d. (a) |
| " " " " " " | No Answers | 14s. 0d. (a) |

## OUT OF PRINT

Blyton: Nature Readers. 14

### CONDITIONS OF SALE

**Booksellers are reminded that despatches are made ex-warehouse.**

श्रीमत्सेश्वराय नमः

क्रिमस्तं किं ध्वस्तं किमु विलुलितं किं गलितं विशीर्णं चाजीर्णं नन्नु सपदि जीर्णं किमपवा - अमन्दे स्वच्छन्दे निरुपमनिजानन्दजलधौ मयि स्वात्ते शान्ते जगदि[illegible] इं न कलये ॥

किमस्तं किं ध्वस्तं किमु विलुलितं किन्नु गलितं
विशीर्णं चाशीर्णं, ननु सपदि जीर्णं, किमपवा ॥
अमन्दे स्वच्छन्दे निरुपमनिजानन्दजलधौ
मयि स्वात्ते शान्ते जगदिदमशेषं नकलये ॥ १॥

(चाशीर्णं) जीर्णं

[illegible]र्णं

ॐ३म् अस्य श्रीविष्णोः सहस्रनामरुद्रशापविमो-
चनमन्त्रस्य श्रीमहादेवऋषिरनुष्टुपछन्दः श्रीरुद्रा
नुग्रहशक्तिर्देवता सुरेशः शरणंशर्मेतिबीजम् अनन्तो
हुतभुग्भोक्तेतिशक्तिः सुरेश्वरायेतिकीलकं रुद्रशा-
पविमोचने जपे विनियोगः ॐक्लींह्रांअङ्गुष्ठाभ्यां
नमः। ॐह्रींतर्जनीभ्यांनमः ॐहूंमध्यमाभ्यांनमः
ॐ हैं अनामिकाभ्यांनमः। ॐ हौं कनिष्ठिका
भ्यांनमः। ॐ ह्रः करतलकरपृष्ठाभ्यांनमः। इति कर
न्यासः। अथषडङ्गन्यासः। ॐ क्लीं ह्रां हृदयायनमः
ॐ ह्रीं शिरसेस्वाहा। ॐ हूं शिखायैवषट्॥ ॐ हैं

कवचायहुं।ऊँ ह्रौं नेत्रत्रयाय वौषट्।ऊँ ह्रः अस्त्रा-
यफट्।इति हृदयादिन्यासः॥अथध्यानम्॥तमा-
लश्यामलतनुंपीतकौशेयवाससं।स्वर्णमूर्तिमयंदेवं
ध्यायेन्नारायणंविभुम् १इतिध्यानम्॥ऊँ क्लीं ह्रां ह्रीं
ह्रूं ह्रैं ह्रौं ह्रः सुरेश्वराय स्वाहा इतिमन्त्रः शतवारं द-
शवारंवाजपित्वा।किंचिज्जलंक्षिप्त्वा प्रार्थयेत्अ-
यश्रीभगवद्विष्णोःसहस्रनामस्तवरुद्रशापाविमुक्तो
भव।एतदनन्तरं सहस्रनामपठनंकुर्यात्॥विष्णोः
सहस्रनाम्नांयोनकृत्वाशापमोचनम्॥ पठेच्छुभा
नि सर्वाणि निष्फलानि भवन्ति वै॥ २॥

श्रीगणेशायनमः ॥ अथ विष्णुसहस्र
नामप्रारंभः ॥ यस्यस्मरणमात्रेणज
न्मसंसारबंधनात् ॥ विमुच्यतेनमस्त
स्मैविष्णवेप्रभविष्णवे ॥नमःसमस्त
भूतानामादिभूतायभूभृते ॥ ॥ अनेक
रूपरूपायविष्णवेप्रभविष्णवे ॥ १ ॥
वैशंपायनउवाच ॥ श्रुत्वाधर्मानशेषे

वंन्नित्यंसर्वदु:खातिगोभवेत् ॥ ७ ॥

ब्रह्मण्यंसर्वधर्मज्ञं लोकानांकीर्तिवर्ध
नम् ॥ लोकनाथंमहद्भूतंसर्वभूतभ
वोद्भवम् ॥ ८ ॥ एषमेसर्वधर्माणांध
र्मोधिकतमोमतः ॥ यद्भक्त्यापुण्डरी
काक्षंस्तवैरर्चेन्नरःसदा ॥ ६ ॥ परमं
योमहत्तेजः परमयोमहत्तपः ॥ परम

योमहद्ब्रह्मपरमंयः परायणाम् ॥ १० ॥
पवित्राणांपवित्रंयो मंगलानांचमंग
लम् ॥ दैवतंदेवतानांचभूतानांयो
व्ययःपिता ॥ ११ ॥ यतःसर्वाणिभू
तानिभवंत्यादियुगागमे ॥ यस्मिंश्च
प्रलयंयांतिपुनरेवयुगक्षये ॥ १२ ॥ त
स्यलोकप्रधानस्यजगन्नाथस्य भूपते

विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १३ ॥ यानि नामानि गौणानि विख्यातानि महात्मनः ॥ ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १४ ॥ ऋषिर्नाम्नांसहस्रस्य वेदव्यासो महामुनिः ॥ छन्दोऽनुष्टुप्तथा देवो भगवान् देवकीसुतः ॥ १५ ॥ विष्णुं जिष्णुं म

हान्निषांप्रभविष्णुंमहेश्वरम् ॥ अनेक
रूपदैत्यान्तंनमामिपुरुषोत्तमं ॥१६॥
अस्यश्रीविष्णो र्दिव्यसहस्रनामस्तो
त्रमंत्रस्य ॥ भगवान्वेदव्यासऋषिः
अनुष्टुप्छन्दः ॥श्रीविष्णुःपरमात्मादेव
ता ॥ अमृतांशूद्भवोभानुरितिबीजम्
देवकीनन्दनःस्रष्टेतिशक्तिः ॥त्रिसामा

सामगःसामेतिहृदयम् ॥ शंखभृन्नंद कीचक्रीतिकीलकम् ॥ शार्ङ्गधन्वाग दाधरइत्यस्त्रम् ॥ रथांगपाणिरक्षोभ्ये तिकवचम् ॥ उद्भवःक्षोभणोदेवइति परमोमंत्रः ॥ श्रीविष्णुप्रीत्यर्थेजपोवि नियोगः ॥ अथ करन्यासः ॥ ॐ उ द्भवाय अंगुष्ठाभ्यांनमः ॥ ॐ क्षोभ

णाय तर्जनीभ्यानमः ॥ ॐ देवाय मध्यमभ्यांनमः ॥ ॐ उद्भवायाना मिकाभ्यांनमः ॥ ॐ चोभणाय क निष्ठिकाभ्यांनमः ॥ ॐ देवाय करत लकरपृष्ठाभ्यांनमः ॥ इतिकरन्यासः॥
अथ हृदयादिषडंगन्यासः ॥ ॐ सुव्रतःसुमुखःसूक्ष्मः ज्ञानाय हृदयाय

नमः ॥ ऊँ सहस्रमूर्धाविश्वात्माऐश्व
र्यायशिरसेस्वाहा ॥ ऊँ सहस्रार्चिः
सप्तजिव्हः शक्त्यैशिखायैवषट्॥ ऊँ
त्रिसामासामगः सामबलायकवचाय
हुं ॥ ऊँ रथांगपाणिरव्दयोभ्यः तेजसे
नेत्राभ्यांवौषट् ॥ ऊँ शार्गधन्वागदा
धरःवीर्यायअस्त्रायफट् ॥ ऊँ ऋतुः

सुदर्शनःकालः भूर्भुवःस्वरोमितिदि
ग्बन्धः ॥ इति हृदयादिन्यासः ॥
॥ अथध्यानम् ॥ ॥ शान्ताकारं
भुजगशयनं पद्मनाभं सुरेशं विश्वा
धारं गगनसदृशं मेघवर्णं शुभांगं ल
क्ष्मीकांतंकमलनयनं योगिभिर्ध्यान
गम्यंवंदेविष्णुंभवभयहरं सर्वलोकैक

नाथम् ॥ १ ॥ ओंविश्वंविष्णुर्वषट्का
रोभूतभव्यभवत्प्रभुः ॥ भूतकृद्भूतभृ
द्भावोभूतात्मा भूतभावनः ॥ १ ॥
पूतात्मापरमात्माचमुक्तानां परमाग
तिःअव्ययःपुरुषः साक्षीक्षेत्रज्ञोऽक्ष
रएवच ॥ २ ॥ योगोयोगविदांनेता
प्रधानपुरुषेश्वरः ॥ नारसिंहवपुः श्री

मान्केशवःपुरुषोत्तमः ॥ ३ ॥ सर्वःश
र्वःशिवः स्थाणुर्भूतादिर्निधिरव्ययः ॥
संभवोभावनोभर्ताप्रभवः प्रभुरीश्वरः
॥ ४ ॥ स्वयंभूःशंभुरादित्यः पुष्करा
क्षोमहास्वनः ॥ अनादिनिधनोधा
ताविधाताधातुरुत्तमः ॥ ५ ॥ अप्र
मेयोहृषीकेशः पद्मनाभोमरप्रभुः ॥

विश्वकर्मा मनुस्त्वष्टास्थविष्ठः स्थवि
रोध्रुवः ॥ ६ ॥ अग्राह्यःशाश्वतः कृष्णो
लोहिताक्षः प्रतर्दनः ॥ प्रभूतस्त्रिककु
द्धामपवित्रंमंगलंपरम् ॥ ७ ॥ ई
शानःप्राणदःप्राणोज्येष्ठः श्रेष्ठः प्रजाप
तिः ॥ हिरण्यगर्भोभूगर्भो माधवोम
धुसूदनः ॥ ८ ॥ ईश्वरोविक्रमीधन्वी

मेधावीविक्रमः क्रमः ॥ अनुत्तमोदुरा
धर्षः कृतज्ञः कृतिरात्मवान् ॥ ९ ॥ सु
रेशः शरणंशर्मविश्वरेताः प्रजाभवः ॥
अहः संवत्सरोव्यालः प्रत्ययः सर्वदर्श
नः ॥ १० ॥ अजःसर्वेश्वरः सिद्धःसि
द्धिःसर्वादिरच्युतः ॥ वृषाकपिरमेया
त्मासर्वयोगविनिसृतः ॥ ११ ॥ व

वि० सुर्वसुमना:सत्यः समात्मासमितः स
८ मः ॥ अमोघः पुंडरीकाक्षोवृषकर्मावृ
षाकृतिः ॥ १२ ॥ रुद्रोबहुशिराबभ्रु
र्विश्वयोनिः शुचिःश्रवाः ॥ अमृतः शा
श्वतःस्थाणुर्वरारोहोमहातपाः ॥ १३ ॥
सर्वगः सर्वविद्भानुर्विष्वक्सेनोजनार्द
नः ॥ वेदोवेदविदव्यंगोवेदांगोवेदवि

त्कविः ॥ १४ ॥ लोकाध्यक्षःसुराध्य
क्षोधर्माध्यक्षःकृताकृतः ॥ चतुरात्मा
चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ १५ ॥
भ्राजिष्णुर्भोजनंभोक्तासहिष्णुर्जग
दादिजः ॥ अनघोविजयोजेताविश्व
योनिःपुनर्वसुः ॥ १६ ॥ उपेंद्रोवाम
नःप्रांशुरमोघःशुचिरूर्जितः ॥ अतीं

वि० द्र:संग्रह:सर्गोधृतात्मानियमोयम: ॥ स०

६ ॥ १७ ॥ वेदोवैद्य:सदायोगीवीरहा
माधवोमधु: ॥ अतींद्रियोमहामायो
महोत्साहोमहाबल: ॥ १८ ॥ महा
बुद्धिर्महाबीर्योमहाशक्तिर्महाद्युति: ॥
अनिर्देश्यवपु:श्रीमानमेयात्मा महा
द्रिधृक ॥ १९ ॥ महेश्वासोमहीभर्ता ६

श्रीनिवासःसतांगतिः ॥ अनिरुद्धःसु
रानंदोगोविंदोगोविंदांपतिः ॥ २० ॥
मरीचिर्दमनोहंसः सुपर्णो भुजगोत्त
मः ॥ हिरण्यनाभःसुतपाः पद्मनाभः
प्रजापतिः ॥ २१ ॥ अमृत्युः सर्वदृक्
सिंहःसंधातासंधिमान्स्थिरः ॥ अजो
दुर्मर्षणः शास्ता विश्रुतात्मासुरारिहा

वि०

१०

॥ २२ ॥ गुरुर्गुरुत्तमोधामसत्य:सत्य
पराक्रम: ॥ निमिषोऽनिमिष:स्रग्वी
वाचस्पतिरुदारधी: ॥ २३ ॥ अग्रणी
र्गामणी:श्रीमान्न्यायोनेतासमीरण:स
हस्रमूर्धाविश्वात्मासहस्राक्ष: सहस्र
पात् ॥ २४ ॥ आवर्त्तनोनिवृत्तात्मा
संवृत:संप्रवर्द्दन: ॥ अह:संवर्त्तकोव
ह्निरनिलोधरणीधर: ॥ २५ ॥ सुप्रसा

स०

१०

न्हिरनिलोधरणीधरः ॥ २५ ॥ सुप्रसा
दःप्रसन्नात्माविश्वधृग्विश्वभुग्विभुः ॥
सत्कर्तासत्कृतिःसाधुर्जन्हुर्नारायणो
नरः ॥ २६ ॥ असंख्येयोप्रमेयात्मावि
शिष्टःशिष्टकृच्छुचिः ॥ सिद्धार्थःसिद्ध
क संल्पः सिद्धिदः सिद्धिसाधनः २७॥
वृषाहीवृषभोविष्णुर्वृषपर्वावृषोदरः ॥

वर्धनोवर्धमानश्चविविक्तः श्रुतिसागरः
॥ २८ ॥ सुभुजोदुर्धरोवाग्मीमहें
द्रोवसुदोवसुः ॥ नैकरूपोबृहद्रूपःशि
पिविष्टः प्रकाशनः ॥ २९ ॥ ओज
स्तेजोद्युतिधरः प्रकाशात्माप्रतापनः ॥
ऋद्धः स्पष्टाक्षरोमंत्रश्चंद्रांशुर्भास्कर
द्युतिः ॥ ३० ॥ अमृतांशूद्भवोभानुः श

शाबिंदुः सुरेश्वरः ॥ औषधंजगतः से
तु:सत्यधर्मपराक्रमः ॥ ३१ ॥ भूतभ
व्यभवन्नाथ:पवन:पावनोनलः ॥ का
महाकामकृत्कांतः कामःकामप्रदःप्र
भुः ॥ ३२ ॥ युगादिकृद्युगावर्त्तोनैक
मायोमहाशनः ॥ अदृश्योव्यक्तरूप
श्चसहस्राजिदनंतजित् ॥ ३३ ॥ इष्टो

विशिष्टःशिष्टेष्टः शिखंडीनहुषोवृषः ॥ क्रोधहाक्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ ३४ ॥ अच्युतः प्रथितः प्राणः प्राणदोवासवानुजः ॥ अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ३५ ॥ स्कंदःस्कंधधरोधुर्यो वरदो वायुवाहनः ॥ वासुदेवोबृहद्भानुरादिदेवःपुरंद

रः ॥ ३६ ॥ अशोकस्तारणस्तारःशू
रःशौरिर्जनेश्वरः ॥ अनुकूलः शताव
र्तःपद्मीपद्मनिभेक्षणः ॥ ३७ ॥ पद्म
नाभोरविंदाक्षः पद्मगर्भशरीरभृत् ॥
महर्द्धिर्ऋद्धोवृद्धात्मा महाक्षो गरुड
ध्वजः ॥ ३८॥ अतुलःशरभोभीमः
समयज्ञोहविर्हरिः ॥ सर्वलक्षणलक्ष

रयोलक्ष्मीवान्समितिंजयः ॥ ३९ ॥
विक्षरोरोहितोमार्गो हेतुर्दामोदरः स
हः ॥ महीधरोमहाभागोवेगवानमि
ताशनः ॥ ४० ॥ उद्भवः क्षोभणोदे
वः श्रीगर्भःपरमेश्वरः ॥ करणंकारणं
कर्ताविकर्तागहनोगुहः ॥ ४१ ॥ व्य
वसायोव्यवस्थानः संस्थानःस्थानदो

ध्रुवः ॥ परर्द्धिःपरमःस्पष्टस्तुष्टःपुष्टः
शुभेक्षणः ॥ ४२ ॥ रामोविरामोवि
रजोमार्गोनेयोनयोनयः ॥ वीरःश
क्तिमतांश्रेष्ठोधर्मोधर्मविदुत्तमः ४३॥
वैकुण्ठःपुरुषःप्राणःप्राणदःप्रणवः पृथुः
हिरण्यगर्भः शत्रुघ्नो व्याप्तोवायुरधो
क्षजः ॥ ४४ ॥ ऋतुःसुदर्शनःकालः

वि० परमेष्ठीपरिग्रहः ॥ उग्रःसंवत्सरोदक्षो स०
१४ विश्रामोविश्वदक्षिणः ॥ ४५ ॥ वि
स्तारःस्थावरःस्थाणुः प्रमाणंबीजम
व्ययम् ॥ अर्थोनर्थोमहाकोशोमहा
भोगोमहाधनः ॥ ४६ ॥ अनिर्विण्णः
स्थविष्ठोभूर्धर्मयूपोमहामखः ॥ नक्ष
त्रनेमिर्नक्षत्रीक्षमःक्षामःसमीहनः ॥ ४६

॥ ४७ ॥ यज्ञईज्योमहेज्यश्चक्रतुःस
त्रंसतांगतिः ॥ सर्वदर्शीविमुक्तात्मा
सर्वज्ञोज्ञानमुत्तमम् ॥ ४८ ॥ सुव्रतः
सुमुखःसूक्ष्मः सुघोषःसुखदःसुहृत् ॥
मनोहरो जितक्रोधो वीरबाहुर्विदार
णः ॥ ४९ ॥ स्वापनःस्ववशोव्यापी
नैकात्मानैककर्मकृत् ॥ वत्सरोवत्स

लोवत्सीरत्नगर्भोधनेश्वरः ॥ ५० ॥ ध
र्मगुब्धर्मकृद्धर्मीसदसत्त्वरमत्त्वरम् ॥
अविज्ञातःसहस्रांशुर्विधाताकृतलक्षा
णाः ॥ ५१ ॥ गभस्तिनेमिःसत्वस्थः
सिंहोभूतमहेश्वरः ॥ आदिदेवोमहा
देवोदेवेशोदेवभृद्गुरुः ॥ ५२ ॥ उत्तरो
गोपतिर्गोप्ताज्ञानगम्यःपुरातनः ॥ ॥

शरीरभूतभृद्भोक्ताकपींद्रो भूरिदक्षि
णः ॥ ५३ ॥ सोमपोमृतपः सोमः पुरु
जित्पुरुसत्तमः ॥ विनयोजयः सत्य
संधोदाशार्हः सात्वतांपतिः ॥ ५४ ॥
जीवोविनयितासाक्षी मुकुंदोमितवि
क्रमः ॥ अंभोनिधिरनंतात्मामहोद
धिशयोंतकः ॥ ५५ ॥ अजोमहार्हः

स्वाभाव्योजितामित्रःप्रमोदनः ॥ आ
नन्दोनन्दनोनंदः सत्यधर्मात्रिविक्रमः
॥ ५६ ॥ महर्षिःकपिलाचार्यः कृतज्ञो
मेदिनीपतिः ॥ त्रिपदस्त्रिदशाध्यक्षो
महाशृंगःकृतांतकृत् ॥ ५७ ॥ महावरा
होगोविंदःसुषेणःकनकांगदी ॥ गुह्यो
गभीरोगहनोगुप्तश्चक्रगदाधरः ॥ ५८ ॥

वेधाःस्वांगोजितः कृष्णोदृढःसंकर्षणो

च्युतः ॥ वरुणोवारुणोवृक्षःपुष्करा

क्षोमहामनाः ॥५९॥ भगवान्भगहा

नंदीवनमालीहलायुधः ॥ आदित्यो

ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः

॥६०॥सुधन्वाखंडपरशुर्दारुणोद्रविण

प्रदः ॥ दिवस्पृक्सर्वदृग्व्यासोवाचस्प

स्पतिरयोनिजः ॥६१॥ त्रिसामासा
मगःसामानिर्वाणंभेषजंभिषक् ॥ सं
न्यासकृच्छमः शान्तोनिष्ठाशान्तिः
परायणः ॥ ६२ ॥ शुभांगःशान्तिदःस्र
ष्टाकुमुदःकुवलेशयः ॥ गोहितोगोप
तिर्गोप्ताऽवृषभाक्षोवृषप्रियः ॥६३॥ अ
निवर्तीनिवृत्तात्मासंक्षेप्ताक्षेमकृच्छि

वः ॥ श्रीवत्सवक्षाःश्रीवासः श्रीपतिः श्रीमतांवरः ॥६४॥ श्रीदःश्रीशःश्रीनिवासःश्रीनिधिःश्रीविभावनः ॥ श्रीधरः श्रीकरःश्रेयः श्रीमाँल्लोकत्रयाश्रयः ॥६५॥ स्वक्षःस्वंगःशतानन्दोनन्दिर्ज्योतिर्गणेश्वरः ॥ विजितात्माविधेयात्मासत्कीर्तिश्छिन्नसंशयः ॥६६॥

उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतःस्थिरः ॥ भूशयोभूषणोभूतिर्विशोकः शोकनाशनः ॥६७॥ अर्चिष्मानर्चितःकुम्भोविशुद्धात्माविशोधनः ॥ अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ॥६८॥ कालनेमिनिहावीरः शौरिः शूरजनेश्वरः ॥ त्रिलोकात्मात्रिलोके

शः केशवःकेशिहाहरिः ॥ ६९ ॥
कामदेवः कामपालः कामीकान्तःकृ
तागमः ॥ अनिर्देश्यवपुर्विष्णु र्वीरो
ऽनन्तोधनंजयः ॥ ७० ॥ ब्रह्मण्यो
ब्रह्मकृद्ब्रह्माब्रह्मब्रह्मविवर्धनः ॥ ब्र
ह्मविद्ब्राह्मणोब्रह्मी ब्रह्मज्ञो ब्राह्मण
प्रियः ॥ ७१ ॥ महाक्रमोमहाक

र्मामहातेजा महोरगः ॥ महाक्र
तुर्महायज्वामहायज्ञो महाहविः ॥
॥ ७२ ॥ स्तव्यःस्तवप्रियः स्तोत्रंस्तुति
स्तोतारणाप्रियः ॥ पूर्णःपूरयितापुण्यः
पुण्यकीर्तिरनामयः ॥ ७३ ॥ मनोजव
स्तीर्थकरोवसुरेतावसुप्रदः ॥ वसुप्रदो
वासुदेवोवसुर्वसुमनाहविः ॥ ७४ ॥ स

द्गतिः सत्कृतिःसत्तासद्भूतिः सत्पराय
णः ॥ शूरसेनोयदुश्रेष्ठःसन्निवासःसु
यामुन ः॥७५॥ भूतावासोवासुदेवःस
र्वासुनिलयोऽनलः ॥ दर्पहादर्पदोदृप्तो
दुर्धरोऽथापराजितः ॥ ७६ ॥ विश्व
मूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ॥
अनेकमूर्तिरव्यक्तः शतमूर्तिः शतान

वि०
२०

नः ॥ ७७ ॥ एकोनैकः सवः कः किं यत्तत्पदमनुत्तमम् ॥ लोकबन्धुर्लोकनाथोमाधवोभक्तवत्सलः ॥ ७८ ॥ सुवर्णवर्णोहेमांगोवरांगश्चन्दनांगदी वीरहाविषमः शून्यो घृताशीरचलश्चलः ॥ ७९ ॥ अमानीमानदोमान्यो लोकस्वामीत्रिलोकधृक् ॥ सुमेधामे

स०
२०

ध्वजोधन्यःसत्यमेधाधराधरः॥ ८० ॥
तेजोवृषोद्युतिधरः सर्वशस्त्रभृतांवरः
प्रग्रहोनिग्रहोऽव्यग्रो नैकशृंगोगदाग्र
जः ॥ ८१ ॥ चतुर्मूर्तिश्चतुर्बाहुश्चतु
र्व्यूहश्चतुर्गतिः ॥ चतुरात्माचतुर्भा
वश्चतुर्वेदविदेकपात् ॥ ८२ ॥ समा
वर्तोनिवृत्तात्मादुर्जयोदुरतिक्रमः ॥

दुर्लभोदुर्गमोदुर्गोदुरावासो दुरारिहा ॥ ८३ ॥ शुभाङ्गोलोकसारंगःसतन्तुस्तन्तुवर्धनः ॥ इन्द्रकर्मामहाकर्मा कृतकर्माकृतागमः ॥ ८४ ॥ उद्भवः सुन्दरःसुंदोरत्ननाभःसुलोचनः॥ अर्कोवाजसनः शृंगीजयंतः सर्वविज्जयी ॥ ८५ ॥ सुवर्णाविंदुरक्षोभ्यः स

र्वागीशेश्वरः ॥ महाह्रदो महागर्तो
महाभूतो महानिधिः ॥ ८६ ॥ कुमु
दः कुंदरः कुंदः पर्जन्यः पावनोनिलः
अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमु
खः ॥ ८७ ॥ सुलभः सुव्रतः सिद्धः शत्रु
जिच्छत्रुतापनः ॥ न्यग्रोधोदुंबरोऽश्व
त्थश्चाणूरांध्रनिषूदनः ॥ ८८ ॥ सह

स्रार्चिःसप्तजिह्वः सप्तैधाः सप्तवाहनः
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयना
शनः ॥ ८९ ॥ अणुर्बृहत्कृशःस्थूलो
गुणभृन्निर्गुणोमहान् ॥ अधृतःस्वधृ
तःस्वास्यःप्राग्वंशोवंशवर्धनः ॥९० ॥
भारभृत्कथितोयोगीयोगीशः सर्वका
मदः ॥ आश्रमःश्रमणः क्षामःसुपर्णो

वायुवाहनः ॥ ६१ ॥ धनुर्धरोधनुर्वे
दोदण्डोदमयितादमः ॥ अपराजि
तःसर्वसहोनियन्तानियमोयमः॥६२॥
सत्त्ववान्सात्त्विकः सत्यः सत्यधर्मप
रायणः॥अभिप्रायः प्रियार्होऽर्हः प्रि
यकृत्प्रीतिवर्धनः ॥ ६३ ॥ विहायस
गतिर्ज्योतिःसुरुचिर्हुतभुग्विभुः ॥ र

विर्वैरोचनः सूर्यः सविता रविलोचनः
॥ ९४ ॥ अनन्तोहुतभुग्भोक्ता सुख
दोनैकजोऽग्रजः ॥ अनिर्विराणः सदा
मर्षीलोकाधिष्ठानमद्भुतः ॥ ९५ ॥
सनात्सनातनतमः कपिलःकपिरव्य
यः ॥ स्वस्तिदःस्वस्तिकृत्स्वस्तिस्व
स्तिभुक्स्वस्तिदक्षिणः ॥ ९६ ॥ अ

रौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ॥ शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥ ९७ ॥ अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ॥ विद्वत्तमो वीतभयः पुण्यश्रवणकीर्त्तनः ॥ ९८॥ उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ॥ वीरहा रक्षणः संतो जीवनः प

वि० यवस्थितः ॥ ९९ ॥ अनन्तरूपोऽ स०
२४ नन्तश्रीर्जितमन्युर्भयापहः ॥ चतुर
स्रोगभीरात्माविदिशो व्यादिशो दि
शः ॥ १०० ॥ अनादिर्भूर्भुवोलक्ष्मीः
सुवीरोरुचिरांगदः ॥ जननोजनज
न्मादिर्भीमोभीमपराक्रमः ॥ १०१ ॥
आधारनिलयो धातापुष्पहासः प्रजा २४

गरः ॥ ऊर्ध्वगः सत्पथाचारःप्राणदःप्र
णवः पणः ॥२॥ प्रमाणंप्राणनिलयः
प्राणभृत्प्राणजीवनः ॥ तत्वंतत्वविदे
कात्माजन्ममृत्युजरातिगः ॥ ३ ॥
भूर्भुवः स्वस्तरुस्तारः सपिताप्रपिता
महः ॥ यज्ञोयज्ञपतिर्यज्वायज्ञांगो
यज्ञवाहनः ॥ ४ ॥ यज्ञभृद्यज्ञकृद्य

ज्ञीयज्ञभुग्यज्ञसाधनः ॥ यज्ञान्तकृ
द्यज्ञगुह्यमन्नमन्नाद एवच ॥ ५ ॥ आ
त्मयोनिः स्वयंजातोवैखानः सामगा
यनः ॥ देवकीनन्दनः स्रष्टाक्षितीशः
पापनाशनः ॥ ६ ॥ शंखभृन्नन्दकी
चक्री शार्ङ्गधन्वागदाधरः ॥ रथांग
पाणिरक्षोभ्यःसर्वप्रहरणायुधः ॥७॥

सर्वप्रहरणायुधॐनम ॥ इति ॥ इ
तीदंकीर्तनीयस्य केशवस्यमहात्मनः
नाम्नांसहस्रंदिव्यानामशेषेणप्रकीर्ति
तम् ॥ ८ ॥ यइदंशृणुयान्नित्यंयश्चा
पिपरिकीर्तयेत् ॥ नाशुभंप्राप्नुयात्कि
ञ्चित्सोऽमुत्रेहचमानवः ॥ ९ ॥ वेदा
न्तगोब्राह्मणः स्यात्क्षत्रियो विजयी

भवेत् ॥ वैश्योधनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ ११० ॥ धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थीचार्थमाप्नुयात् ॥ कामानवाप्नुयात्कामीप्रजार्थीप्राप्नुयात्प्रजाम् ॥ ११ ॥ भक्तिमान्यः सदोत्थायशुचिस्तद्गतमानसः ॥ सहस्रंवासुदेवस्यनाम्नामेतत्प्रकीर्तयेत् ॥

॥ १२ ॥ यशःप्राप्नोतिविपुलंज्ञाति
प्राधान्यमेवच ॥ अचलांश्रियमाप्नो
तिश्रेयःप्राप्नोत्यनुत्तमम् ॥ १३ ॥ न
भयंक्वचिदाप्नोतिवीर्यंतेजश्चाविन्दति
भवत्यरोगो द्युतिमान् बलरूपगुणा
न्वितः ॥ १४ ॥ रोगार्तो मुच्यतेरो
गाद्बद्धोमुच्येतबन्धनात् ॥ भयान्मु

च्येतभीतस्तुमुच्येतापन्न आपदः ॥
॥ १५ ॥ दुर्गाण्यतितरत्याशुपुरुषः
पुरुषोत्तमम् ॥ स्तुवन्नामसहस्रेणनि
त्यंभक्तिसमन्वितः ॥ १६ ॥ वासुदे
वाश्रयोमर्त्योवासुदेवपरायणः ॥ स
र्वपापविशुद्धात्मायातिब्रह्मसनातनम्
॥ १७ ॥ नवासुदेवभक्तानामशुभं

विद्यतेक्कचित् ॥ जन्ममृत्युजरा
व्याधिभयंनैवोपजायते ॥ १८ ॥ इ
मंस्तवमधीयान: श्रद्धाभक्तिसमन्वि
त: ॥ युज्येतात्मसुखक्षांतिश्रीधृति
स्मृतिकीर्तिभि: ॥ १९ ॥ नक्रोधो
नचमात्सर्यंनलोभोनाशुभामति: ॥
भवन्तिकृतपुण्यानां भक्तानां पुरुषो

त्तमे ॥ १२० ॥ द्यौःसचन्द्रार्कनक्ष
त्रांखंदिशोभूर्महोदधिः ॥ वासुदेव
स्यवीर्येणविधृतानिमहात्मनः २१ ॥
ससुरासुरगन्धर्वंसयक्षोरगराक्षसम् ॥
जगद्वशेवर्ततेदं कृष्णस्यसचराचरम् ॥
॥ २२ ॥ इन्द्रियाणिमनोबुद्धिःसत्त्वं
तेजोबलंधृतिः ॥ वासुदेवात्मकान्या

हु:क्षेत्रंक्षेत्रज्ञएवच ॥ २३ ॥ सर्वाग
मानामाचार: प्रथमंपरिकल्प्यते ॥
आचार:प्रथमोधर्मोधर्म स्यप्रभुरच्यु
त: ॥ २४ ॥ ऋषय: पितरोदेवामहा
भूतानिधातव: ॥ जंगमाजंगमंचेदं
जगन्नारायणोद्भवम् ॥ २५ ॥ यो
गोज्ञानंयथासांख्यंविद्या: शिल्पादि

कर्मंच ॥ वेदाःशास्त्राणिविज्ञानमेत
त्सर्वंजनार्दनात् ॥ २६ ॥ एकोविष्णु
र्महद्भूतं पृथग्भूतान्यनेकशः ॥ त्रीं
ल्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुग
व्ययः ॥ २७ ॥ इमंस्तवंभगवतो
विष्णोर्व्यासेनकीर्तितम् ॥ पठेद्यइ
च्छेत्पुरुषः श्रेयः प्राप्तुंसुखानिच २८

विश्वेश्वरमजंदेवंजगतः प्रभावाप्ययम्
भजन्तियेपुष्कराक्षंनतेयांतिपराभव
म् ॥ २९ ॥ अर्जुनउवाच ॥ ॥ प
द्मपत्रविशालाक्षपद्मनाभसुरोत्तम ॥
भक्तानामनुरक्तानांत्राता भवजनार्द
न ॥ १३० ॥ श्रीभगवानुवाच ॥ यो
मांनामसहस्त्रेण स्तोतुमिच्छति पा

राडव ॥ सोहमेकेनश्लोकेनस्तुतएवन संशयः ॥ ३१ ॥ नमोस्त्वनन्तायस हस्रमूर्तये सहस्रपादाक्षिशिरोरुबाह वे ॥ सहस्रनाम्नेपुरुषायशाश्वते सह स्रकोटीयुगधारिणेनमः ॥ ३२ ॥ न मःकमलनाभायनमस्ते जलशायिने नमस्तेकेशवानंत वासुदेवनमोस्तुते॥

॥ ३३ ॥ वासनाद्वासुदेवस्यवासितं
भुवनत्रयम् ॥ सर्वभूतनिवासोसिवा
सुदेवनमोस्तुते ॥ ३४ ॥ नमोब्रह्म
ण्यदेवाय गोब्राह्मणहितायच ॥ जग
द्धितायकृष्णायगोविंदायनमोनमः ॥
॥ ३५ ॥ आकाशात्पतितंतोयंयथा
गच्छतिसागरम् ॥ सर्वदेवनमस्कारः

केशवंप्रतिगच्छति ॥ ३६ ॥ एषनि
ष्कराटकः पन्थायत्रसंपूज्यतेहरिः ॥
कुपथंतंविजानी याद्गोविंदरहितागम
म् ॥ ३७ ॥ सर्ववेदेषुयत्पुरायंसर्वती
र्थेषुयत्फलम् ॥ तत्फलं समवाप्नोति
स्तुत्वादेवं जनार्दनम् ॥ ३८ ॥ यो
नरः पठतेनित्यंत्रिकालंकेशवालये ॥

द्विकालमेककालं वाक्रूरंसर्वंव्यपोहति ॥ ३९ ॥ दह्यन्तेरिपवस्तस्य सौम्याः सर्वेसदाग्रहाः ॥ विलीयन्तेचपापा निस्तवेह्यस्मिन्प्रकीर्तिते ॥ १४० ॥ येनध्यातः श्रुतोयेनयेनायंपठितः स्त वः ॥ दत्तानिसर्वदानानिसुराः सर्वेस मर्चिताः ॥ ४१ ॥ इहलोकेपरेवापि

नभयंविद्यते क्वचित् ॥ नाम्नासहस्रं योऽधीतेद्वादश्यांममसन्निधौ ॥ ४२ ॥ सनिर्दहतिपापानि कल्पकोटिशतानिच ॥ अश्वत्थसन्निधौ पार्थकृत्वामनसिकेशवम् ॥ ४३ ॥ पठेन्नामसहस्रंतुगवांकोटिफलंलभेत् ॥ शिवालयेपठेन्नित्यंतुलसीवनसंस्थितः ॥४४ ॥

नरोमुक्तिमवाप्नोतिचक्रपाणेर्वचो य
था॥ ब्रह्महत्यादिकंपापंसर्वंसद्यो वि
नश्यति ॥४५॥ इतिश्रीमन्महा भारते
शतसहस्रसंहितायां वैयासिक्यामानु
शासनिकेपर्वणिदानधर्मे भीष्मयुधि
ष्ठिरसंवादे श्रीविष्णोर्दिव्यसहस्रना
मस्तोत्रंसम्पूर्णम् ॥ * * *

१ ॐ श्री दुग्धनिवारकर्त्रे नमः ।।

२ ॐ श्री भक्तानामभयकर्त्रे नमः ।।

३ ॐ श्री पार्वतीप्राणेशे नमः ।।

४ ॐ श्री विघ्नहर्त्रे नमः ।।

५ ॐ श्री तपोवनपवित्राय नमः ।।

६ ॐ श्री सीतारक्षकाय नमः ।।

७ ॐ श्री आयुःकर्त्रे नमः ।।

८ ॐ श्री रोगहर्त्रे नमः ।।

९ ॐ श्री निधिदात्रे नमः ।।

१० ॐ श्री द्विजाधिपाय नमः ।।

११ ॐ श्री बुद्धिदाय नमः ।।

१२ ॐ श्री यशोप्रदाय नमः ।।

१३ ॐ श्री विद्यारक्षाकर्त्रे नमः ।।

१४ ॐ श्री गणनायकाय नमः ।।

१५ ॐ श्री गणप्रियाय नमः ।।

१६ ॐ श्री वाममार्गनिरोधकाय नमः ।।

*An Important Reissue*

# SOCIAL LIFE AT ROME IN THE AGE OF CICERO

## by W. Warde Fowler

*Fellow and Lecturer of Lincoln College, Oxford.*

In response to a considerable demand, this study of political [illegible] social condi[illegible]
Ciceronian Rome has again been brought back into print.

8½ x 5½ inches. xviii +362 pages. Illustrated with 4 diagrams and map. .25[illegible]

**BOOKS PUBLISHED THIS WEEK**

*Thursday April 18th*

Guthrie: *Madame Ambassador*. 16s. net.
Reaney: *Killdeer & Other Plays*. 30s. net.